श्रीगणेशाय नमः ॥ हरिः ॐ पवित्रेस्त्थो वैष्णव्यौसवितुर्व्वः प्रस
वउत्पुनाम्म्यच्छिद्रेणपवित्रेणसूर्य्यस्यरश्मिभिः ॥ तस्यंतेपवित्र
पतेपवित्रपूतस्ययत्कामः पुनेतच्छकेयम् ॥ १ ॥ च्चित्पतिम्मापुना
तुवाक्पतिम्मापुनातुदेवोमांसवितापुनात्वच्छिद्रेणपवित्रेण सूर्य्यस्य
रश्मिभिः ॥ तस्यंतेपवित्रपतेपवित्रपूतस्ययत्कामः पुनेतच्छकेय
म् ॥२॥ पुनन्तुमादेवजनाः पुनन्तुमनसाधियः ॥ पुनन्तुविश्वाभूतानि
जातवेदः पुनीहिमा ॥ ३ ॥ यथेमांव्वाचंकल्याणीमावदानिजनेभ्यः ॥

ब्रह्मराजन्याभ्या᳘ᳫ्शूद्रायचार्य्यायचस्वायचारणायच

योदेवानान्दक्षिणायै दातुरिहभूयासमयम्मे कामः᳘समृद्ध्यतामुपमा ॥ प्रि

दोनमतु ॥ ४ ॥ सत्रस्यऽऋद्धिरस्यगन्मज्ज्योतिरमृताऽअभूम ॥ दि

वम्पृथिव्याऽअध्यारुहामाविदामदेवान्त्स्वर्ज्ज्योतिः ॥ ५ ॥ स्व

स्तिनऽइन्द्रोवृद्धश्रवाः᳘स्वस्तिनः᳘पूषाविश्ववेदाः ॥ स्वस्तिनस्तार्क्ष्यो

ऽअरिष्टनेमिः᳘स्वस्तिनोबृहस्पतिर्दधातु ॥ ६ ॥ भूरसिभूमिरस्यदिति

रसिविश्वधायाविश्वस्यभुवनस्यधर्त्री ॥ पृथिवीँय्यच्छपृथिवीन्दृं

ठंहपृथिवीम्माहिंठंसीः ॥ ७ ॥ आजिंघ्रकुलशम्मुह्यात्वाविशन्त्वि
न्दंवः ॥ पुनरूर्ज्जानिवर्तस्वसानंःसुहस्रन्धुक्ष्वोरुधारापयस्वती
पुनुर्म्माविंशताद्रयिः ॥ ८ ॥ मुहीद्यौः पृथिवीचंनऽइमंय्यज्ञम्मि
मिक्षताम् ॥ पिपृतान्नोभरीमभिः ॥ ९ ॥ व्वरुंणस्योत्तम्भंनमसिव्व
रुंणस्यस्कम्भुसर्ज्जनीस्त्थो व्वरुंणस्यऽऋतसदंन्यसि व्वरुंणस्यऽऋ
तसदंनमसिव्वरुंणस्यऽऋतसदंनमासींद ॥ १० ॥ धान्यमसिधिनु
हिदेवान्प्राणायत्वोदानायत्वाव्यानायत्वा ॥ दीर्घामनुप्प्रसितिमा

युंषेधान्देवोवंःसविताहिरंण्यपाणिः प्प्रतिगृब्भ्णात्वच्छिद्द्रेणपाणि
नाचक्षुषेत्वामहीनाम्पयोंसि ॥ ११ ॥ याऽओषंधीः पूर्व्वाजातादेवे
ब्भ्यंस्त्रियुगम्पुरा ॥ मनैनुबब्भ्रूणांमहठंशतंधामानिसप्तचं ॥ १२ ॥
परिवाजंपतिङ्कविरग्निर्हव्यान्यंक्रमीत् ॥ दधद्द्रत्नानिदाशुषे ॥ १३ ॥
याःफलिनीर्याऽअफलाऽअपुष्पायाश्चंपुष्पिणीः ॥ बृहस्पतिप्रसू
तास्तानोमुञ्चन्त्वठंहंसः ॥ १४ ॥ हिरण्यगर्ब्भःसमंवर्त्तताग्ग्रेभूतस्य
जातःपतिरेकंऽआसीत् ॥ सदाधारपृथिवींद्यामुतेमाङ्कस्मैदेवायह

विषांव्विधेम ॥ १५ ॥ अश्श्वत्थेवोनिषदंनम्पर्णेवोव्वसतिष्कृता ॥
गोभाजऽइत्किलासथयत्सनवथपूरुषम् ॥ १६ ॥ सुजातोज्ज्यो
तिषासहशर्म्मव्वरूथमासदत्स्वः ॥व्वासोऽअग्नेव्विश्वरूपꣳसंव्व्ययस्व
स्वव्विभावसो॥१७॥पूर्णादर्व्विपरापतसुपूर्णापुनरापत ॥ व्वस्नेवव्वि
क्रीणावहाऽइषमूर्ज्जꣳशतक्रतो ॥१८॥तदंस्तुमित्रावरुणातदग्नेशंय्योर
स्मभ्यमिदमस्तुशस्तम् ॥ अशीमहिगाधमुतप्प्रतिष्ठांनमोदिवेबृहते
सादनाय ॥ १९ ॥ मनोजूतिर्ज्जुषतामाज्ज्यस्यबृहस्पतिर्य्यज्ञमिम

न्तंनोत्वरिष्टँध्यज्ञठंसमिमन्दंधातु ॥ व्विश्वेदेवासंऽइहमादयन्तामो ३ँ
प्प्रतिष्ठ ॥ २० ॥ मनोजूतिर्ज्जुषतामाज्ज्यस्येतिमनसावाऽइदठंस
र्व्वमात्तन्तन्मनसैवैतत्सर्व्वमाप्नोतिबृहस्पतिर्य्यज्ञमिमन्तनोत्वरिष्टँध्य
ज्ञठंसमिमन्दधात्वितियद्विवृडन्तत्सन्दधाति व्विश्वेदेवासऽइहमादय
न्तामितिसर्व्वँव्वाविश्वेदेवाः सर्व्वेणैवैतत्सन्दधातिसयदिकामयेतब्रू
यात्प्रतिष्ठेति ॥ २१ ॥ एषवैप्रतिष्ठानामयज्ञोयत्रैतेनयज्ञेनयजन्तेस
र्व्वमेवप्रतिष्ठितम्भवति ॥२२॥ काण्डात्काण्डात्प्ररोहन्तीपरुषःपरुष

स्प्पारि ॥ एवानोदूव्वैप्रतंनुसहस्त्रेणशतेनच ॥२३॥ चन्द्रमाऽअप्प्स्व
न्तरास्सुपुर्णोधावतेदिवि ॥ रयिम्पिशङ्गम्बहुलंपुरुस्पृहठंहरिरेति
कनिक्क्रदत् ॥ २४ ॥ यदाबध्नन्दाक्षायणाहिरण्यठंशतानीकायसुम
नस्यमानाः ॥ तन्मऽआबध्नामिशतशारदायायुष्माञ्जरदष्टिर्य्यथा
सम् ॥ २५ ॥ आयुष्यँव्वर्च्चस्यठंरायस्प्पोषमौद्भिदम् ॥ इदठंहिरण्यँ
व्वर्च्चस्वज्जैत्रायाविशतादुमाम् ॥ २६ ॥ मनसःकाममाकूतिँव्वाचः
सत्यमशीय ॥ पशूनाठंरूपमन्नस्यरसोयशःश्रीःश्रयताम्मयिस्वा

हा ॥ २७ ॥ व्रतेनदीक्षामाप्नोतिदीक्षयाप्नोतिदक्षिणाम् ॥ दक्षिणाश्र
द्धामाप्नोतिश्रद्धयासत्यमाप्यते ॥ २८ ॥ तम्पत्नीभिरनुगच्छेमदे
वाः पुत्रैर्भ्रातृभिरुतवाहिरण्यैः ॥ नाकङ्गृभ्णानाः सुकृतस्यलोकेतृ
तीयेपृष्ठेऽअधिरोचनेदिवः ॥ २९ ॥ इति प्रथमोऽध्यायः ॥ १ ॥
आकृष्णेनरजसावर्तमानोनिवेशयन्नमृतम्मर्त्यञ्च ॥ हिरण्ययेनस
वितारथेनादेवोयातिभुवनानिपश्यन् ॥ १ ॥ इमन्देवाऽअसपत्नꣳ
सुवद्ध्वम्महतेक्षत्राय महतेज्यैष्ठ्याय महतेजानराज्यायेन्द्रस्ये

न्द्रियाय ॥ इममुमुष्यपुत्रममुष्यैपुत्रमस्यैविशऽएषवोमीराजासो
मोस्माकंम्ब्राह्मणानाꣳराजा ॥ २ ॥ अग्निर्मूर्द्धादिवःककुत्पतिःपृ
थिव्याऽअयम् ॥ अपाꣳरेताꣳसिजिन्वति ॥३॥ उद्बुध्यस्वाग्नेप्रति
जागृहित्वमिष्टापूर्त्तेसꣳसृजेथामयञ्च ॥ अस्मिन्त्सधस्थेऽअध्यु
त्तरस्मिन्विश्वेदेवायजमानश्चसीदत ॥ ४ ॥ बृहस्पतेऽअतियदर्यो
ऽअर्हाद्द्युमद्विभातिक्रतुमज्जनेषु ॥ यद्दीदयच्छवसऽऋतप्रजाततद
स्मासुद्रविणन्धेहिचित्रम् ॥५॥ अन्नात्परिस्रुतोरसम्ब्रह्मणाव्यपिबत्क्ष

त्रम्पयुःसोमम्प्रजापतिः ॥ ऋतेनसत्यमिन्द्रियँविपानꣳशुक्रमन्ध
सऽइन्द्रस्येन्द्रियमिदम्पयोमृतम्मधु ॥ ६ ॥ शन्नोदेवीरभिष्टयऽआपो
भवन्तुपीतये॥ शँय्योरभिस्रवन्तुनः ॥ ७॥ कयानश्चित्रऽआभुवदूती
सदावृधःसखा ॥ कयाशचिष्ठयावृता ॥ ८ ॥ केतुङ्कृण्वन्नकेतवेपे
शोमर्य्याऽअपेशसे ॥ समुषद्भिरजायथाः ॥ ९ ॥ इति सामिद्धोमः ॥
द्वितीयोऽध्यायः ॥ २ ॥ ॥ * ॥ ॥ * ॥ ॥ * ॥
अग्निन्दूतम्पुरोदधेहव्यवाहमुपब्रुवे ॥ देवा२ँऽआसादयादिह॥ १ ॥

अप्स्वग्ने सधिष्टव सौषधीरनुरुद्ध्यसे ॥ गर्भे सञ्जायसे पुनः ॥ २ ॥
स्योना पृथिवि नो भवानृक्षरा निवेशनी ॥ यच्छा नः शर्म्म सप्रथाः ॥
॥ ३ ॥ इदं विष्णुर्व्विचक्रमे त्रेधा निदधे पदम् ॥ समूढमस्य पांसुरे स्वा
हा ॥ ४ ॥ महाँ२ऽइन्द्रो वज्रहस्तः षोडशी शर्म्म यच्छतु ॥ हन्तु पाप्मानं
यो स्मान्द्वेष्टि ॥ ५ ॥ शुक्रज्योतिश्च चित्रज्योतिश्च सत्यज्योति
श्च ज्योतिष्मांश्च ॥ शुक्रश्च ऋतपाश्चात्यंहाः ॥ ६ ॥ प्रजापते न
त्वदेतान्यन्यो विश्वा रूपाणि परिता बभूव ॥ यत्कामास्ते जुहुमस्त

द

॥ ७ ॥

न्नोऽअस्तुव्वयꣳस्यामपतयोरयीणाम् ॥ ७ ॥ आयङ्गौःपृश्निरक्रमी

दसदन्मातरम्पुरः॥ पितरञ्चप्रयन्त्स्वः ॥ ८ ॥ ब्रह्मयज्ञानम्प्रथमम्पुर

स्ताद्विसीमतःसुरुचोव्वेनऽआवः ॥ सबुध्न्याऽउपमाऽअस्यव्विष्ठाःस

तश्चयोनिमसतश्चव्विवः ॥ ९ ॥ इति नवग्रहस्थापनम् ॥ ३ ॥ ॐ त्र्यम्ब

कँय्यजामहेसुगन्धिम्पुष्टिवर्धनम् ॥ उर्व्वारुकमिवबन्धनान्मृत्योर्मुक्षी

यमामृतात् ॥ त्र्यम्बकंय्यजामहेसुगन्धिम्पतिवेदनम् ॥ उर्व्वारुकमि

वबन्धनादितोमुक्षीयमामुतः ॥ १ ॥ श्रीश्चतेलक्ष्मीश्चपत्न्यावहोरा

अ०

४

॥ ७ ॥

त्रेपाश्वैनक्षत्राणिरूपमश्विनौव्यात्तम् ॥ इष्णन्निषाणामुम्मंऽइषाण
सर्व्वंलोकम्मंऽइषाण ॥२॥ यदक्रन्दः प्रथमञ्जायमानऽउद्यन्त्समुद्राद्
तवापुरीषात् ॥ श्येनस्यपक्षाहरिणस्यबाहूऽउपस्तुत्यम्महिजातन्ते
ऽअर्व्वन्॥३॥ व्विष्णोरराटमसिव्विष्णोःश्नप्त्रेस्त्थोव्विष्णोःस्यूरसि
व्विष्णोर्द्ध्रुवोसि ॥ व्वैष्णवमसिव्विष्णवेत्वा॥४॥आब्रह्मन्ब्राह्मणोब्रह्म
वर्च्चसीजायतामाराष्ट्रेराजन्न्यःशूरइषव्योतिव्याधी महारथो जाय
तान्दोग्ध्रीधेनुर्व्वोढानड्वानाशुःसप्तिःपुरन्धिर्य्योषाजिष्णूरथेष्ठाः सभे

योयुवांस्ययजंमानस्यव्वीरोजांयतान्निकामोनिंकामेनः पर्ज्जन्योंव्वर्षतु
फलंवत्योंनऽओषंधयः पच्यन्तांयोगक्षेमोंनः कल्पताम् ॥ ५ ॥
सजोषांऽइन्द्रसगंणोमरुद्भिः सोमंम्पिबव्वृत्रहाशूंरव्विद्वान् ॥ जहिशत्रूँ
रपमृधोंनुदस्वाथाभंयंकृणुहिव्विश्वतोंनः ॥ ६ ॥ यमायंत्वामखायं
त्वासूर्य्यस्यंत्वातपंसे ॥ देवस्त्वांसवितामद्ध्वांनक्तुपृथिव्याः सꣳस्पृ
शस्पाहि॥अर्चिरंसिशोचिरंसितपोंसि॥ ७ ॥ कार्षिरंसिसमुद्रस्यत्वा
क्षित्त्याऽउन्नंयामि ॥ समापोंऽअद्भिरंग्मतसमोषंधीभिरोषंधीः ॥८॥

च्चित्रांवसोस्वुस्तितेंपारमंशीय ॥ ९ ॥ इति नवग्रहदेवतास्थाप
नम् ॥ ४ ॥ ॥ सनं÷पितेवंसूनवेग्ग्नेसूपायुनोभंव ॥ सचंस्वानंःस्वुस्त
यें ॥ १ ॥ अपोऽअद्यान्न्वंचारिषंरसेनुसमंसृक्ष्महि ॥ पयंस्वानग्न
ऽआगंमुन्तम्मासठंसृंजुवंर्च्चसाप्रुजयांचुधनेंनच ॥ २ ॥ चिदंसितया
देवतंयाङ्गिरुस्वद्ध्रुवासीदंपरिचिंदंसितयां देवतंयाङ्गिरस्वद्ध्रुवासींद
॥ ३ ॥ इदुँविष्णुंः० ॥ ४ ॥ इन्द्रंऽआसान्नेताबृहुस्पतिर्दक्षिणायुज्ञःपुर
ऽएंतुसोमं÷॥देवुसेनानांमभिभञ्जतीनाञ्जयंन्तीनाम्मुरुतोंयुन्त्वग्ग्रंम्।

॥ ५ ॥ इन्द्रन्दैवीर्व्विशोमरुतोनुवर्त्मानोभवन्यथेन्द्रन्दैवीर्व्विशोमरुतो
नुवर्त्मानोभवन् ॥ एवमिमँय्यजमानन्दैवीश्चव्विशोमानुषीश्चानुवर्त्मा
नोभवन्तु ॥ ६ ॥ प्रजापतेनत्वदेतान्यन्न्योव्विश्वारूपाणिपरिताबभू
व। यत्कामास्तेजुहुमस्तन्नोऽअस्त्वयममुष्यपितासावस्यपितावयꣳ
स्यामपतयोरयीणाꣳस्वाहा ॥ रुद्रयत्तेक्रिविपरन्नामतस्मिन्हुतमस्य
मेष्टमसिस्वाहा ॥ ७ ॥ नमोस्तुसर्प्पेभ्योयेकेचपृथिवीमनु ॥ येऽअन्त
रिक्षेयेदिवितेभ्यः सर्प्पेभ्योनमः ॥ ८ ॥ ब्रह्मयज्ञानम्प्रथमम्पुरस्ता

द्विसींमतःसुरुचोंव्वेनऽआंवः ॥ सबुध्न्याऽउपमाऽअंस्यंव्विष्ठाः सतश्च

योनिमसंतश्चव्विवंः॥ ९ ॥ इति नवग्रहाधिदेवतास्थापनम् ॥ ५ ॥

आनोंभुद्राःक्रतंवोयन्तुव्विश्वतोदंब्धासोऽअपंरीतासऽउद्भिदंः ॥ देवा

नोयथासदुमिद्वृधेऽअसन्नप्प्रांयवेरक्षितारोंदिवेदिंवे ॥ १ ॥ देवानांम्भ

द्रासुमतिर्ऋजूयतान्देवानांᳬंरातिरभिनोनिवंर्तताम् ॥ देवानांᳬंस

ख्यमुपंसेदिमाव्वयन्देवानऽआयुःप्प्रातिंरन्तुजीवसें ॥२॥ तान्पूर्व्वया

निविदांहूमहेव्वयम्भगंम्मित्रमदितिन्दक्षंमस्त्रिधंम् ॥ अर्य्यमणंव्वरु

णुऽसोमंमुश्विनासरस्वतीनःसुभगामयस्करत् ॥ ३ ॥ तन्नः॥तन्नो
वातामयोभुवातुभेषजन्तन्मातापृथिवीतत्पिताद्यौः ॥ तद्ग्रावाणः
सोमसुतौमयोभुवस्तदश्विनाशृणुतन्धिष्ण्ययुवम् ॥ ४ ॥ तमीशानं
म्॥तमीशानञ्जगतस्तस्थुषस्पतिन्धियञ्जिन्वमवसेहूमहेव्वयम्॥
पूषानोयथावेदसामसद्वृधेरक्षितापायुरदब्धःस्वस्तये ॥ ५ ॥ स्वस्ति
नऽइन्द्रोव्वृद्धश्रवाःस्वस्तिनःपूषाविश्ववेदाः ॥ स्वस्तिनस्तार्क्ष्योऽ
अरिष्टनेमिःस्वस्तिनोबृहस्पतिर्द्दधातु ॥ ६ ॥ पृषदश्वामरुतः

पृश्निमातरः शुभंयावानो विदथेषु जग्मयः ॥ अग्निजिह्वा मनवः सूर
चक्षसो विश्वे नो देवा ऽअवसागमन्निह ॥ ७ ॥ भद्रं कर्णेभिः शृणुयाम
देवा भद्रम्पश्येमाक्षभिर्यजत्राः ॥ स्थिरैरङ्गैस्तुष्टुवाᳫंसस्तनूभिर्व्य
शेमहि देवहितं यदायुः ॥ ८ ॥ शतमिन्नु शरदो ऽअन्ति देवा यत्रा नश्च
क्रा जरसन्तनूनाम् ॥ पुत्रासो यत्र पितरो भवन्ति मा नो मद्ध्या रीरिषता
युर्गन्तोः ॥ ९ ॥ इति नवग्रहप्रत्याधिदेवतास्थापनम् ॥ ६ ॥ गुणा
नान्त्वा गणपतिᳫं हवामहे प्रियाणान्त्वा प्रियपतिᳫं हवामहे निधी

नान्त्वानिधिपतिꣳहवामहेव्वसोमम ॥ आहमजानिगर्भधमात्वम
जासिगर्भधम् ॥ १ ॥ जातवेदसे ॥ जातवेदसेसुनवामसोममरा
तीयतोनिदहातिवेदः ॥ सनःपर्षदतिदुर्गाणिविश्वानावेवसिन्धुन्दुरि
तात्यग्निः॥२॥व्वायोयेतेसहस्रिणोरथासस्तेभिरागहि ॥ नियुत्वा
न्त्सोमपीतये ॥ ३॥ घृतंघृतपावानःपिबतव्वसांव्वसापावानःपिबता
न्तरिक्षस्यहविरसिस्वाहा ॥ दिशःप्प्रदिशऽआदिशोव्विदिशऽउद्दिशो
दिग्भ्यःस्वाहा ॥ ४ ॥ यावाङ्कशामधुमत्याश्विनासूनृतावती ॥ तया

यज्ञम्मिमिक्षतम्॥५॥इति पञ्चलोकपालस्थापनम् ॥ ७ ॥ ॥ अ
श्श्विनातेजसाचक्षुः प्राणनेसरस्वतीव्वीर्य्यम् ॥ व्वाचेन्द्रोबलेनेन्द्राय
दधुरिन्द्रियम्॥१॥यमायत्वा०॥ २ ॥अयमग्ग्निः सहस्त्रिणोव्वाजस्यश
तिनस्प्पतिः॥मूर्द्धाकवीरयीणाम् ॥३॥ब्रह्मयज्ञानम्प्रथमम्० ॥ ४ ॥
सोमोधेनुर्ठसोमोऽअर्व्वन्तमाशुर्ठसोमोव्वीरंकर्म्मण्यन्ददाति ॥ सादु
न्न्यँव्विदथ्यर्ठसभेयम्पितृश्श्रवणँय्योददाशदस्म्मै ॥५॥ नमस्तेरुद्रम
न्न्यवऽउतोतऽइषवेनमः॥बाहुब्भ्यामुततेनमः ॥६॥ अदितिर्द्यौरदि

तिरन्तरिक्षमदितिर्म्माता सपिता सपुत्त्रः ॥ विश्श्वेदेवा ऽअदितिः पंच
जना ऽअदितिर्ज्जातमदितिर्जनित्वम् ॥ ७ ॥ द्याच स्प्पतये पवस्स्वव
ष्णा ऽअंशुब्भ्यां गभस्तिपूतः ॥ देवो देवेब्भ्यः पवस्स्व येषां भागोसि
॥८॥ नमोस्तु सर्प्पेब्भ्यः ॥ ९ ॥ पितृब्भ्यः स्वधायिब्भ्यः स्वधान
मः पितामहेब्भ्यः स्वधायिब्भ्यः स्वधा नमः प्प्रपितामहेब्भ्यः स्वधा
यिब्भ्यः स्वधा नमः ॥ अक्षन्न्पितरो मीमदन्त पितरो तीतृपन्त पित
रः पितरः शुन्धद्ध्वम् ॥ १० ॥ भगप्प्रणेतर्ब्भग सत्यराधो भगेमान्धियमु

देवाददन्नः ॥ भगप्प्रनोजनयगोभिरश्वैर्भगप्प्रनृभिर्न्नृवन्तः स्याम
॥११॥ दैव्यावध्वर्यूऽआगतठ्ठरथेनसूर्यत्वचा ॥ मध्वायज्ञठ्ठसमञ्जा
थे ॥ तम्प्रक्त्नथायँवेनश्चित्रन्देवानाम् ॥१२॥ विभ्राड्बृहत्पिबतु
सोम्म्यम्मध्वायुर्दधद्यज्ञपतावविह्रुतम् ॥ वातजूतोयोऽअभिरक्षतित्म
नाप्प्रजाः पुपोषपुरुधाविराजति ॥ १३ ॥ त्वष्टातुरीयोऽअद्भुतऽइन्द्रा
ग्नीपुष्टिवर्द्धना ॥ द्विपदाच्छन्दऽइन्द्रियमुक्षागौर्न्नवयोदधुः ॥१४॥ पीवो
ऽअन्नारयिवृधः सुमेधाः श्वेतः सिषक्तिनियुतामभिश्रीः ॥ तेवायवे

समनसोव्वितस्त्थार्वीश्वेन्नरः स्वपत्त्यानिचक्रः
ऽआगतम् ॥ इन्द्राग्नीऽआगतꣳसुतङ्गीर्ब्भिर्न्नभोवरेण्यम् ॥ अस्यपात
न्धियेषिता ॥ नमोमित्रस्य ॥ नमोमित्रस्यवरुणस्यचक्षसेमहोदेवाय
तदृतꣳसपर्य्यत ॥ दूरेदृशेदेवजातायकेतवेदिवस्पुत्रायसूर्य्यायशꣳ
सत ॥ १६ ॥ सऽइषुहस्तैःसनिषुङ्गिभिर्व्वशीसꣳस्त्रष्टासयुधऽइन्द्रो
गणेन ॥ सꣳसृष्टजित्सोमपाबाहुशर्ध्ध्यूग्रधन्न्वाप्प्रतिहिताभिरस्ता
॥ १७ ॥मातेवपुत्त्रम् ॥मातेवपुत्त्रम्पृथिवीपुरीष्यमग्निꣳस्वेयोनाव

॥ १५ ॥ इन्द्राग्नी



भारुषा ॥ ताम्विश्श्वैर्द्देवैर्ऋतुभिः संविदानः प्रजापतिर्विश्वकर्म्मा

विमुञ्चतु ॥ १८ ॥ अपाघमपकिल्बिषमपकृत्यामपोरपः ॥ अपा

म्मार्ग्गत्वमस्म्मदपदुःष्वप्न्यठंसुव ॥ १९ ॥ विश्श्वअद्य ॥ विश्श्वेऽ

अद्यमरुतोविश्श्वऽऊतीविश्श्वेभवन्त्वग्नयः समिद्धाः ॥ विश्श्वेनोदेवाऽ

अवसागमन्तुविश्श्वमस्तुद्द्रविणंवाजोऽअस्म्मे ॥ २० ॥ तत्सवितुः ॥

तत्सवितुर्व्वरेण्यम्भर्ग्गोदेवस्यधीमहि ॥ धियोयोनः प्रचोदयात् ॥

॥ २१ ॥ इदंविष्णु० ॥ २२ ॥ वसोःपवित्रम् ॥ वसोःपवित्रमसिशत



दं० धारँव्वसोः पवित्रंमसिसहस्रंधारम् ॥ देवस्त्वांसवितापुंनातुव्वसोः प अ०

॥१४॥ वित्रेणशतधारेणसुप्वाकामंधुक्षः ॥ २३ ॥ व्वरुणस्योत्तम्भंनम् ० ॥ ८

॥ २४ ॥ उतनोहिर्बुध्न्यः शृणोत्वजऽएकंपात्पृथिवीसंमुद्रः ॥ विश्वेदे

वाऽऋतावृधोहुवानास्तुतामन्त्राः कविशस्ताऽअवन्तु ॥ २५ ॥ शिवो

नामांसिस्वधितिस्तेपितानमंस्तेऽअस्तुमामाहिंᳫसीः ॥ निवर्त्तयामि

म्यायुषेन्नाद्यायप्प्रजननायरायस्पोषायसुप्प्रजास्त्वाय सुवीर्य्याय ॥१४॥

॥ २६ ॥ पूषन्तवंव्व्रतेव्वयन्नरिष्ष्येमकदांचन ॥ स्तोतारस्तऽइहस्म

सि ॥ २७ ॥ इति नक्षत्रस्थापनम् ॥ अष्टमोऽध्यायः ॥ ८ ॥ ॥
योगेयोगेतवस्तरम्वाजेवाजेहवामहे ॥ सखायऽइन्द्रमूतये ॥ १ ॥
भद्रंकर्णेभिःशृणुयामदेवाभद्रम्पश्येमाक्षभिर्यजत्राः ॥ स्थिरैरङ्गै
स्तुष्टुवाᳬंसस्तनूभिर्व्यशेमहिदेवहितँय्यदायुः ॥ २ ॥ ध्रुवासिध्रुवो
यँय्यजमानोस्मिन्नायतनेप्रजयापशुभिर्भूयात् ॥ घृतेनद्यावापृ
थिवीपूर्य्येथामिन्द्रस्यच्छदिरसिविश्वजनस्यच्छाया ॥ ३ ॥ पञ्च
नद्यःसरस्वतीमपियन्तिसस्रोतसः ॥ सरस्वतीतुपञ्चधासोदेशेभव

त्सुरित् ॥ ४॥ सप्तऽऋषयःप्प्रतिहिताःशरीरेसप्तरक्षन्तिसदमप्प्रमाद
म् ॥ सप्तापःस्वपतोलोकमीयुस्तत्रजागृतोऽअस्वप्नजौसत्रस
दौचदेवौ ॥ ५ ॥ इमम्मेवरुणश्रुधीहवमद्याचमृडय ॥ त्वामव
स्युराचके ॥ ६ ॥ प्रपर्वतस्यवृषभस्यपृष्ठान्नावश्चरन्तिस्वसि
चऽइयानाः ॥ ताऽआववृत्रन्नधरागुदक्ताऽअहिम्बुध्न्यमनुरीयमा
णाः ॥ विष्णोर्विक्रमणमसिविष्णोर्विक्रान्तमसिविष्णोःक्रान्तम
सि ॥ ७ ॥ जवोयः ॥ जवोयस्तेवाजिन्निहितोगुहायःश्येनेपरी

त्तोऽअचरञ्चवाते ॥ तेनंनोव्वाजिन्न्बलंवान्न्बलेनव्वाजजिच्चभवस
मनेचपारयिष्णुः ॥ व्वाजिनोव्वाजजितोव्वाजꣳसरिष्यन्तोबृहस्पते
र्भागमवजिघ्घ्रत ॥ ८ ॥ सुपर्णोसिगरुत्मांस्त्रिवृत्तेशिरोगायत्रञ्चक्षु
र्बृहद्रथन्तरेपक्षौ ॥ स्तोमऽआत्माच्छन्दाꣳस्यङ्गानियजूꣳषिनाम ॥
सामतेतनूर्वामदेव्यंय्यज्ञायज्ञियम्पुच्छन्धिष्ण्याःशफाः ॥ सुपर्णो
सिगरुत्मान्दिवङ्गच्छस्वःपत ॥ ९ ॥ असंख्यातासहस्राणियेरु
द्राऽअधिभूम्म्याम् ॥ तेषाꣳसहस्रयोजनेवधन्न्वानितन्मसि ॥ १० ॥

सहस्रशीर्षापुरुषः सहस्राक्षः सहस्रपात् ॥ सभूमिꣳसर्व्वतस्स्पृत्वात्याति
ष्ठद्दशांगुलम् ॥ ११ ॥ सू० वास्तोष्पतेप्प्रतिजानीह्यस्म्मान्स्वावे
शोऽअनमीवोभवानः ॥ यत्त्वेमहेप्प्रतितन्नोजुषस्वशन्नोभवद्द्विप
देशञ्चतुष्पदे ॥ १२ ॥ सू० अमीवहावास्तोष्पतेविश्वारूपाण्या
विशन् ॥ सखासुशेवऽएधिनः ॥ १३ ॥ गुणानान्त्वा० ॥ १४ ॥
नमोस्तुसर्प्पेभ्यो० ॥ १५ ॥ ऋक् ॥ जातवेदसेसुनवामसोममरा
तीयतोनिदहातिवेदः ॥ सनःपर्षदतिदुर्ग्गाणिविश्श्वानावेवसिन्धु

॥१६॥

न्दुरितात्यग्निः॥१६॥प्रजापतेन ॥ प्रजापतेनत्वदेतान्न्यन्न्योविश्वा
रूपाणिपरितावभूव ॥ यत्कामास्तेजुहुमस्तन्नोऽअस्तुवयᳬस्याम
पतयोरयीणाम् ॥ १७ ॥ योवःशिवतमोरसस्तस्यभाजयतेहनः॥
उशतीरिवमातरः॥१८॥ इति ध्रुवादिस्था० ॥ नवमोऽध्यायः ॥ ९ ॥
ऋक् ॥ अग्निमीळेपुरोहितंयज्ञस्यदेवमृत्विजम् ॥होतारंरत्नधातमम्
॥ १ ॥ यजुः ॥ इषेत्वोर्ज्जेत्वावायवस्थदेवोवःसविताप्प्रार्प्पयतु
श्श्रेष्ठतमायकर्म्मणऽआप्यायध्वमघ्न्याऽइन्द्राय भागम्प्रजावतीरन

मीवाऽअयक्ष्मामावस्तेनऽईशत माघशꣳसोध्रुवाऽअस्मिन्गोपतौ
स्यातबह्वीर्य्यजमानस्यपशून्पाहि ॥ २ ॥ साम ॥ अग्नआयाहि
वीतयेगृणानोहव्यदातये ॥ निहोतासत्सिबर्हिषि ॥ ३ ॥ अथर्व ॥ श
न्नः॥शन्नोदेवीरभिष्टय० ॥४॥ इतिवेदादिस्था०॥दशमोऽध्यायः१०
त्रातारमिन्द्रम् ॥ त्रातारमिन्द्रमवितारमिन्द्रꣳहवेहवेसुहवꣳशूरमि
न्द्रम् ॥ ह्वयामिशक्रम्पुरुहूतमिन्द्रꣳ स्वस्तिनोमघवाधात्विन्द्रः
॥ १ ॥त्वन्नोऽअग्नेतवदेवपायुभिर्म्मघोनोरक्षतन्वश्चवन्द्य ॥ त्राता

तोकस्स्यतनयेगवामस्यानिमेषर्ठरक्षमाणस्तवव्व्रते ॥ २ ॥ सू०
सुगन्नपन्थाम्प्रादिशन्नऽएहिज्योतिष्मद्धेह्यजरन्नऽआयुः ॥ अपैतुमृत्यु
रमृतम्मऽआगाद्वैवस्वतोनोऽअभयंकृणोतु ॥ ३ ॥ असुन्वन्तु
मयजमानमिच्छस्तेनस्येत्यामन्न्विहिस्तस्करस्य ॥ अन्यमस्स्म
दिच्छसातऽइत्यानमोदेविनिर्ऋतेतुभ्यमस्तु ॥ ४ ॥ तत्त्वायामिब्र
ह्मणाव्वन्दमानस्तदाशास्तेयजमानोहविर्भिः ॥ अहेडमानोव्वरुणे
हबोद्धचुरुशर्ठसमानऽआयुःप्प्रमोषीः ॥ ५ ॥ आनः ॥ आनोनियु

द्भिःशतिनीभिरध्वरꣳसहस्रिणीभिरुपयाहियज्ञम् ॥ वायोऽअ
स्मिन्न्त्सवनेमादयस्स्वयूयम्पातस्वस्तिभिःसदानः ॥ ६ ॥ वयꣳ
सोमव्व्रतेतवमनस्तनूषुबिभ्रतः ॥ प्रजावन्तःसचेमहि ॥ ७ ॥ त
मीशानम्० ॥८॥ अस्मेरुद्द्राः ॥ अस्मेरुद्द्रामेहनापर्व्वतासोवृत्रहत्ये
भरहूतौसजोषाः ॥ यःशꣳसतेस्तुवतेधायिपज्रइन्द्रज्ज्येष्ठाऽअस्माँ
२ अवन्तुदेवाः ॥९॥ स्योनापृथिवि० ॥ १० ॥ इतिदिक्पालस्था० एका
दशो० ॥११॥ चित्तिञ्जुहोमिमनसाघृतेनयथादेवाऽइहागमन्वीतिहो

त्राऽऋतावृधः ॥ पत्येव्विश्वस्यभूमनोजुहोमिव्विश्वकर्म्मणेव्विश्वा
हादाब्भ्यꣳहविः ॥१॥ सप्ततै ॥ सप्ततेऽअग्नेसमिधःसप्तजिह्वाः
सप्तऽऋषयःसप्तधामप्प्रियाणि ॥ सप्तहोत्राःसप्तधात्वायजन्ति
सप्तयोनीरापृणस्वघृतेनस्वाहा ॥ २ ॥शुक्रज्ज्योतिश्च० ॥३॥ ईदृङ्
चान्यादृङ्चसदृङ्चप्प्रतिसदृङ्च ॥ मितश्चसम्मितश्चसभराः॥४॥
ऋतश्चसत्यश्चध्रुवश्चधरुणश्च ॥ धर्त्ताचव्विधर्त्ताचव्विधारयः ॥ ५ ॥
ऋतजिच्चसत्यजिच्चसेनजिच्चसुषेणश्च ॥ अन्तिमित्रश्चदूरेऽअमित्र

श्चगणः ॥ ६ ॥ ईदृक्षासऽएतादृक्षासः॥ईदृक्षासऽएतादृक्षासऽऊषुणः
सदृक्षासःप्रतिसदृक्षासऽएतंन ॥ मितासश्चसम्मितासोनोऽअद्यस
भरसोमरुतोयज्ञेऽअस्मिन् ॥ ७ ॥ स्वतवाँश्चप्रघासीचसान्तपनश्च
गृहमेधीच॥ क्रीडीचशाकीचोज्जेषी ॥ ८ ॥ उग्रश्चभीमश्चध्वान्तश्चधु
निश्च ॥ सासहाँश्चाभियुग्वाचविक्षिपः स्वाहा ॥ ९ ॥ पुनस्त्वादित्या
रुद्रावसवःसमिन्धताम्पुनर्ब्रह्माणो वसुनीथयज्ञैः ॥ घृतेनत्वन्तन्वं
वर्द्धयस्वसत्याः सन्तुयजमानस्यकामाः ॥ १० ॥ त्त्र्यायुषजमद

ग्नेःकश्यपस्यत्र्यायुषम् ॥ यद्देवेषुत्र्यायुषन्तन्नोऽअस्तुत्र्यायुषम् ॥
॥ ११ ॥ ॥ इति पूर्णाहुतिः॥१२॥इन्द्रन्दैवी० ॥१॥ इमꣳस्तनम्॥इ
मꣳस्तनमूर्ज्जस्वन्तन्धयापाम्प्रपीनमग्नेसरिरस्यमद्ध्ये ॥ उत्सञ्जुष
स्वमधुमन्तमर्व्वन्त्समुद्रियꣳसदनमाविशस्व ॥ २ ॥ घृतम्मिमिक्षेघृ
तमस्ययोनिर्घृतेश्रितोघृतम्वस्यधाम ॥ अनुष्वधमावहमादयस्व
स्वाहाकृतंवृषभवक्षिहव्यम् ॥ ३ ॥ समुद्रादूर्म्मिर्म्मधुमाँ२उदारदुपा
ꣳशुनासममृतत्वमानट् ॥ घृतस्यनामगुह्यंयदस्तिजिह्वादेवानाममृ

तस्यनाभिः ॥ ४ ॥ वयन्नाम॥वयन्नामप्प्रब्ब्रवामाघृतस्स्यास्मिन्य
ज्ञेधारयामानमोभिः ॥ उपब्ब्रह्माशृणवच्छस्यमानञ्चतुःशृङ्गोवमीद्गौ
रऽएतत् ॥ ५ ॥ चत्वारिशृङ्गात्रयोऽअस्यपादाद्द्वेशीर्षेसप्तहस्तासोऽ
अस्य ॥ त्रिधाबद्धोवृषभोरोरवीतिमहोदेवोमर्त्याँ२ऽआविवेश ॥ ६ ॥
त्रिधाहितम्पणिभिर्गुह्यमानङ्गविदेवासोघृतमन्न्वविन्दन् ॥ इन्द्रऽए
कॅंसूर्य्यऽएकञ्जजानव्वेनादेकॅंस्वधयानिष्टतक्षुः ॥ ७ ॥ एताऽअ
र्षन्तिहृद्यात्समुद्राच्छतव्व्रजारिपुणानावचक्षे ॥ घृतस्यधाराऽअभि

चाकशीमिहिरण्ययोंव्वेतुसोमध्यंऽआसाम् ॥ ८॥ सुम्म्यक्स्त्रवन्ति ॥सु
म्म्यक्स्त्रवन्तिसरितोनधेना अन्तर्हृदामनसापूयमानाः॥एतेऽअर्षन्त्य
मयोघृतस्यमृगाऽइवक्षिपुणोरीषमाणाः ॥ ९ ॥ सिंधोरिव॥सिंधोरिव
प्प्राध्वनेशूघनासोव्वातप्प्रमियः पतयंतियह्वाः ॥ घृतस्यधाराऽअरुषो
नव्वाजीकाष्ठाभिन्दन्नूर्मिभिःपिन्वमानः ॥ १० ॥ अभिप्प्रवंतसम
नेवयोषाःकल्याण्यःस्मयमानासोऽअग्निम् ॥ घृतस्यधाराःसमि
धोनसंततजुषाणोहर्य्यतिजातवेदाः ॥११॥ कन्न्याऽइवव्वहतुम् ॥ कु

न्याऽइववहतुमेतवाऽउऽअंन्यआनाऽअभिचाकशीमि ॥ यत्रसोमः
सूयतेयत्रयज्ञोघृतस्यधाराऽअभितत्पवन्ते ॥ १२ ॥ अभ्यर्षतसुष्टु
तिङ्गव्यमाजिमस्मासुभद्राद्रविणानिधत्त ॥ इमँय्यज्ञन्नयतदेवतानो
घृतस्यधारामधुमत्पवन्ते ॥ १३ ॥ धामन्ते॥धामन्तेविश्वम्भुवनम
धिश्रितमन्तः समुद्रेहृद्यन्तरायुषि ॥ अपामनीकेसमिथेयऽआभृत
स्तमश्याममधुमन्तन्तऽऊर्मिम् ॥ १४ ॥ चतुर्भिश्चचतुर्भिश्चद्वा
भ्याम्पंचभिरेवच॥हूयतेचपुनर्द्वाभ्यांतस्मैयज्ञात्मनेनमः ॥ १५ ॥

ज्ञानतोऽज्ञानतोवापिमन्त्रकर्म्मक्रियाविधिः ॥ संपूर्णंकुरुयज्ञेशगार्हप
त्यनमोऽस्तुते ॥ १६ ॥ यथाशस्त्रप्रहाराणांकवचंभवतिवारणम् ॥ तद्व
देवापघातानांशांतिर्भवतिवारणम् ॥ १७ ॥ इतिवैश्वानरस्तुतिः ॥
॥ १३ ॥ आपोहिष्ठामयोभुवस्तानऽउर्ज्जेदधातन ॥ महेरणायचक्षसे
॥ १ योवः शिवतमोरसस्तस्यभाजयतेहनः ॥ उशतीरिवमातरः ॥२॥
तस्माऽअरङ्गमामवोयस्यक्षयायजिन्वथ ॥ आपोजनयथाचनः ॥ ३ ॥
त्रातारमिन्द्रम० ॥४॥ वरुणस्योत्तंभन० ॥५॥ भगप्रणेत:० ॥ ६ ॥

इदमापः॒प्रवहतावद्यञ्चमलंञ्चयत् ॥ यच्चाभिदुद्रोहानृतँय्यच्चशेपेऽअ
भीरुणम्॥आपोमातस्मादेनसः॒पवमानश्चमुञ्चतु ॥७॥ सुमुद्रायत्वा
व्वातायस्वाहासरिरायत्वाव्वातायस्वाहा ॥ अनाधृष्यायत्वाव्वाताय
स्वाहाप्प्रतिधृष्यायत्वाव्वातायस्वाहा ॥ अवस्येवत्वाव्वातायस्वा
हाशिमिदायत्वाव्वातायस्वाहा ॥ ८ ॥ पुनन्तुमादेवजनाः॒० ॥९ ॥
आप्प्यायस्वसमेतुतेव्विश्वतः॒सोमवृष्ण्यम् ॥ भवावाजस्यसंगथे
॥१०॥ शिरोमेश्रीर्य्यशोमुखन्त्विषिः॒केशाश्चश्मश्रूणि॥ राजामे

प्प्राणाऽअमृतर्ठसम्म्राट्चक्षुर्व्विराट्श्श्रोत्त्रम् ॥ ११॥ जिह्वामेभद्द्रंवाङ्
महोमनोमुन्न्युःस्वराड्भामः ॥मोदाःप्प्रमोदाऽअङ्गुलीरङ्गानिमित्त्रम्मे
सहः ॥ १२ ॥ बाहूमेबलमिन्द्रियर्ठहस्तौमेकर्म्मव्वीर्य्यम् ॥ आत्त्माक्ष
त्त्रमुरोमम ॥ १३ ॥ पृष्टीर्म्मेराष्ट्रमुदरमर्ठसौग्ग्रीवाश्चश्श्रोणी ॥ऊरू
ऽअरत्त्नीजानुनीव्विशोमेङ्गानिसर्व्वतः ॥ १४ ॥ नाभिर्म्मेचित्तंव्विज्ञा
नम्पायुर्म्मेपचितिर्ब्भसत् ॥ आनन्दनन्दावाण्डौमेभगःसौभाग्ग्यम्प
सः ॥जङ्घाब्भ्याम्पद्भ्यान्धर्म्मोस्मिव्विशिराजाप्प्रतिष्ठितः ॥ १५॥

पयं÷पृथिव्याम्० ॥ १६ ॥ देवस्यंत्वासवितुःप्प्रसवेश्विनोर्ब्बाहु
भ्यांम्पूष्णोहस्ताभ्याम् ॥ सरस्वत्यैव्वाचोयन्तुर्य्यन्त्रियैदधामिबृ
हस्पतेष्ट्वासाम्राज्ज्येनाभिषिंञ्चाम्म्यसौ ॥ १७ ॥ देवस्यंत्वासवि
तुःप्प्रसवेश्विनोर्ब्बाहुब्भ्यांम्पूष्णोहस्ताभ्याम् ॥ सरस्वत्यैव्वाचो
युन्तुर्य्यन्त्रेणाग्ग्नेः साम्म्राज्येनाभिषिंञ्चामि ॥ १८ ॥ देवस्यंत्वासवि
तुः प्प्रसवेश्विनोर्ब्बाहुब्भ्यांम्पूष्णोहस्ताभ्याम् ॥ अश्विनोर्भैषज्ज्ये
नतेजसेब्रह्मवर्च्चसायाभिषिंञ्चामि ॥ सरस्वत्यैभैषज्ज्येन व्वीर्य्यायाा

॥२३॥

न्नाद्यायाभिषिंञ्चामींद्रस्येन्द्रियणेबलांयाश्रियैयशसेऽभिषिंञ्चामि ॥
॥ १९ ॥ ब्रा० पालाशम् ॥ पालाशंभवतितेनब्राह्मणोऽभिषिञ्चतिब्रह्म
वैपलाशोब्रह्मणैवेनमेतदभिषिञ्चति ॥ २० ॥ ब्रा०सर्वेषाँवाऽएषवेदा
नाᳬरसोयत्सामसर्वेषामेवैनमेतद्वेदानाᳬरसेनाभिषिञ्चति ॥ २१ ॥
ब्रा० यद्देवकल्पाञ्जुहोति प्राणावैकल्पोऽअमृतमुपवैप्प्राणाऽअमृते
नैवैनमेतदभिषिञ्चति ॥ २२ ॥ दीर्घायुत्वायबलायवर्चसेसुप्प्रजा
स्त्वायचासाऽअथोजीवशरदःशतम् ॥ २३ ॥ द्यौःशान्तिरन्तरिक्षᳬ

शान्तिः पृथिवीशान्तिरापः शान्तिरोषधयः शांतिः॥ व्वनस्पतयः शा
न्तिर्विश्वेदेवाः शान्तिर्ब्रह्मशान्तिः सर्व्वꣳशान्तिः शान्तिरेवशांतिः
सामाशान्तिरेधि ॥ २४ ॥ इतिअमृताभिषेकोऽस्तु ॥ १४ ॥ ऋ०
श्रीवर्च्चस्वमायुष्यमारोग्यमाविधात्पवमानम्महीयते ॥ धान्यंधनंपशुं
बहुपुत्रलाभंशतसम्वत्सरन्दीर्घमायुः॥ १ ॥ पुत्रमिवपितरौ॥ पुत्रमि
वपितरावश्विनोभेन्द्रावथुःकाव्यैर्दꣳसनाभिः ॥ यत्सुरामव्यपिबः
शचीभिःसरस्वतीत्वामघवन्नभिष्णक् ॥ २ ॥ कामङ्कामदुघेधुक्ष्वमि

त्रायुवरुणायच ॥ इन्द्रायाश्विभ्याम्पूषणेप्रजाभ्यऽओषधीभ्यः
॥ ३ ॥ ब्रा० अथपूर्वार्द्धेनदक्षिणाकामङ्कामदुग्धेधुक्ष्वमित्रायवरुणाय
च ॥ इन्द्रायाश्विभ्याम्पूषणेप्रजाभ्यऽओषधीभ्यः ॥ इतिसर्व्व
देवत्यावैकृषिरेताभ्योदेवताभ्यःसर्व्वान्कामान्धुक्ष्व ॥ ४ ॥ ब्रा०
अथसुमङ्गलनामानंह्वयतिबहुकारश्रेयस्करभूयस्करोति यऽएवन्ना
माभवतिकल्याणमेवैतन्मानुष्यैवाचोवदति ॥ ५ ॥ ब्रा० तंवैदेवा
स्तन्नाविदुर्व्ययनेऽसर्व्ववाकुर्वन्नवासर्वंयद्यातिवारे च यन्नावाक्याय

यंस्तऽएनामृचमपश्यन् धामच्छद्ग्निरिन्द्रोब्रह्मादेवोबृहस्पतिः ॥ स
चेतसोविश्वेदेवायज्ञंप्रावन्तुनःशुभइति ॥ ६ ॥ यजुः ॥इमामेऽअग्न
ऽइष्टकाधेनवः सन्त्वेकाचदशचदशचशतञ्चशतञ्चसहस्रञ्चसहस्र
ञ्चायुतञ्चायुतञ्चनियुतञ्चनियुतञ्चप्रयुतञ्चार्बुदञ्चन्यर्बुदञ्च समुद्र
श्च मध्यञ्चान्तञ्चपरार्द्धश्चैतामेऽअग्नइष्टकाधेनवः सन्त्वमुत्राम
ष्मिँल्लोके ॥७॥ विवस्वन्नादित्यैषतेसोमपीथस्तस्मिन्मत्स्व ॥ श्रद
स्मैनरोवचसेदधातनुयदाशीर्दादम्पतीवाममश्नुतः ॥ पुमान्पुत्रोजा

यंतोद्विन्दतेब्वस्वधांव्विश्श्वाहांरुपऽएंधतेगृहे ॥८॥ अग्नेगृहपतेसुगृहपु
तिस्त्वयांग्नेहंगृहपंतिनाभूयासठंसुगृहपतिस्त्वम्मयांग्ने गृहपंतिना
भूयाः ॥ अस्थूरिणौगार्हपत्यानिसन्तुशतठंहिमाःसूर्य्यंस्यावृतम
न्वावंर्त ॥ ९ ॥ धन्वंनागाः ॥ धन्वंनागाधन्वंनाजिञ्जयेमधन्वंना
तीव्राःसमदोजयेम ॥ धनुःशत्रोरपकामंकृणोतिधन्वंनासर्व्वाःप्रदि
शोजयेम ॥१०॥ व्विश्श्वांनिदेवसवितर्दुरितानिपरांसुव॥यद्भद्रन्त
न्नऽआसुंव ॥ ११ ॥ ब्रा०तस्यैसप्तदशसामिधेन्योभवन्तिसद्भन्तावा

ज्यभागौसदेवावरुन्धेविश्श्वानिदेवसवित: सधानोदेव: सवितास
हावेत्युपाᳩंशुहविषो याज्यानुवाक्येऽअनुष्टुभौ ॥ संय्यज्मेरजतꣳ
हिरण्यन्दक्षिणानानारूपतायाऽअथोक्तमायानपक्कमाय शतमान
म्भवति शतायुर्वै पुरुषः शतेन्द्रियआयुरेवेन्द्रियं व्वीर्य्यमात्मन्धत्ते
॥ १२ ॥ मन्त्रार्थाः सफलाः संतुपूर्णाःसंतुमनोरथाः ॥ शत्रूणांबुद्धिना
शोऽस्तुमित्राणामुदयोऽस्तुवः ॥ १ ॥ ऋग्वेदोऽथयजुर्व्वेदःसामवेदोह्य
थर्वणः ॥ ब्रह्मवर्च्चसदानित्यंहन्त्यंततवशत्रवः ॥२॥ अक्षतान्विप्रहस्ते

षुनित्यंवंदंतियेनराः ॥ चत्वारोवृद्धिमायांतुआयुःकीर्तिर्य्यशोबलम्
॥ ३ ॥उतिंष्ठब्रह्मणस्पतेदेवुयंतंस्त्वेमहे ॥ उपुप्प्रयंन्तुमुरुतः सुदानं
वुऽइंद्रंप्प्राशूर्भवासर्चा ॥१३॥ गच्छगच्छसुरश्रेष्ठस्वस्थानेपरमेश्वर॥
यत्रब्रह्मादयोदेवास्तत्रगच्छहुताशन ॥१४॥ इति दंण्डकं समाप्तम् ॥

संवत् १९८५, शके १८५०.

| नाम. | की. रु आ |
|---|---|
| ऋग्वेदसंहिता--मूल . | ३--८ |
| ऋग्वेदी मन्त्रसंहिता--(सस्वर) ... | १--८ |
| कलिसंतारणोपनिषद्--भाषाटीकासहित । "हरे राम हरे राम" आदि षोडश नाम महामन्त्रका विधान व माहात्म्य | ०--१॥ |
| कैवल्योपनिषद्--मूल ... | ०--।।। |
| गृह्यसूत्र--पारस्कराचार्यप्रणीत ( हरिहर-भाष्यसहित) इसमें षोडशसंस्कारादिके मन्त्र और कारिका है . | ०--२ |

| नाम. | की. रु. आ. |
|---|---|
| गृह्यसूत्र पारस्कराचार्यकृत--शुकदेववर्मप्रणीत भाषाभाष्य सहित । यह शुक्ल यजुर्वेदियोंको वैदिक कर्मोंकी निस्सन्देह इतिकर्तव्यता दिखानेवाला तथा भाषाभाष्ययुक्त होनेसे सर्व साधारणको अमूल्य निधि है ... | ३--० |
| गोभिलगृह्यसूत्र--(गोभिलाचार्यप्रणीत) संस्कृतटीका तथा भाषाटीकासहित ... | २--८ |

| नाम. | की. रु. आ. |
| --- | --- |
| नारायणोपनिषद्--इसमें नारायणाथर्वशिर उपनिषद्, वज्रसूचिकोपनिषद्,- कठोपनिषद् आदि उपनिषद् और अनेक श्रुति, स्मृति आदिके वचनोंका भाषार्थसहित प्रमाण देकर वेदान्तके अनेकविषयोंका वर्णन है ... ... ... | १--८ |
| निरुक्त अर्थात् निघण्टु--(वैदिककोष)का भाष्य । यास्कमुनिविरचित दुर्गाचार्यकृत व्याख्यासहित । महामहोपाध्याय पं. शिवदत्तजी शास्त्रिकृत टिप्पणियां भी हैं | ८--० |

| नाम. | की. रु. आ. |
| --- | --- |
| पितृसंहिता--श्राद्धादिकोंमें ब्राह्मणभोजनके समय पाठ करने योग्य. ... | ०--२ |
| पुरुषसूक्त--विष्णुसूक्त--श्रीसूक्त--भूसूक्त--नीलासूक्त मूल नित्य पाठोपयोगी | ०--१॥ |
| पुरुषसूक्त--स्व० वि० वा० पं० ज्वालाप्रसादमिश्रकृत भाषाटीकासहित. ... | ०--५ |
| भवसन्तारणोपनिषद्--स्वामी श्रीरामप्रपन्नजीकृत भाषाटीकासहित ... | ०--१२ |
| मन्त्रसंहिता--शुक्लयजुर्वेदी नित्यकर्मानुष्ठान तथा व्यवहारोपयोगी मन्त्रोंका अपूर्व संग्रह | ०--८ |

| नाम. | की. रु. आ. |
| --- | --- |
| मन्त्रभागवत—वेदके मन्त्रोंसे श्रीमद्भागवतकी अपूर्व कथा | ०--८ |
| मन्त्ररामायण--वेदके मन्त्रोंसे रामायणकी रोचक कथा, सुन्दर जिल्द बँधी है | १—० |
| मुक्तिकोपनिषद्--भाषाटीकासहित | ० -५ |
| याज्ञवल्क्यशिक्षा—स्व० वि० पं०ज्वालाप्रसाद मिश्रकृत भाषाटीकासहित | ०—६ |
| रुद्री शुक्लयजुर्वेदी—मूल षडङ्गन्याससहित | ०—४ |
| रुद्राष्टाध्यायी—स्व वि वा. पं० ज्वाला-प्रसादजीमिश्रकृत सभाष्य अत्युत्तम भाषाटीका व जिल्द सहित ... | १—४ |
| रुद्रभाष्य—श्रीमदभिनवशंकराचार्यप्रणीत । शुक्ल यजुर्वेदकी रुद्रीके ५ वें अध्यायका अपूर्व भाष्य है ... ... | १—० |
| शतपथब्राह्मण—सायणभाष्य तथा टिप्पणीसहित—प्रथमकाण्ड ... ... | ५—० |
| शतपथब्राह्मण—सायणभाष्यसहित, शेष काण्ड छप रहे हैं. ... ... | |

| नाम | की. रु. आ. |
|---|---|
| शुक्लयजुर्वेद—( वाजसनेयी ) संहितामूल—ब्राह्मण कर्मकाण्डादिमें अत्यन्त उपयोगी मन्त्रानुक्रमणिका, अनुवाक, प्रतिज्ञासूत्र, याज्ञवल्क्यशिक्षा, स्वरभक्ति अष्टाध्याय्यादिकममें मन्त्रानुक्रमणिकासहित स्थूलाक्षरोंमें ... ... | ३—८ |
| शुक्लयजुर्वेदसंहिता—म० विद्यावारिधि पं० ज्वालाप्रसादजी मिश्रकृत "मिश्रभाषाभाष्य" (भा.टी.) सहित । इसमें मन्त्रोंके ऋषि, छन्द, देवता और विनियोग प्रतिमन्त्रमें वर्णित हैं और कात्यायन श्रौत सूत्रों तथा प्राचीन भाष्योंके अभिप्रायानुसार मन्त्रार्थ बहुत ही सुगम रीतिसे वर्णन कर उसकी विधि, प्रमाण और अभिप्राय भी साथ ही साथ लिखे हैं. ... ... | १५—० |
| श्रीसूक्तभाष्य—भाषाभाष्यसहित ... | ०—२ |
| श्रुतिसिद्धान्तसारसंग्रह—(अष्टोत्तरशत उपनिषदोंका सारसंग्रह) आत्मविद्या—प्रेमियोंको अवश्य मनन करने योग्य. | ३—० |

अथ विदुषोनुष्टुभा प्रार्थयते ॥ भ्रांत्येति ॥ मयेह कुंडरत्नावल्यां भ्रांत्या चित्तविक्षेपेण प्राचीनानां पूर्वाचार्याणां मततो विरुद्धं यत्किंचिल्लिखितं तद्दयालवः विद्वांसः शोधयंतु शुद्धिं कुर्वंत्वित्यर्थः ॥ १६४ ॥ अथ ग्रंथसमाप्तिदिवसमनुष्टुभाह ॥ खेति ॥ नवत्युत्तरसप्तदशशततमे शालीवाहनशके भाद्रपदमासस्य कृष्णपक्षे शिवे तिथावेकादश्यां समापिता समाप्तिं

भ्रांत्या प्राचीनमततो विरुद्धमिह यन्मया। लिखितं तत्तु विद्वांसः शोधयंतु दयालवः ॥१६४॥
खनंदमुनिभू १७९० शाके भाद्रकृष्णे शिवेतिथौ। समापिता चार्पिता च कंठे विश्वेश्वरस्य सा ॥ १६५ ॥ इति श्रीमज्जज्योपाह्वकृष्णदीक्षितबाबूदीक्षितापरनामधेयसूरिसूनुरामचंद्रदीक्षितरचिता कुंडरत्नावली समाप्ता ॥ श्रीमदभिमानिनीदेवताचरणसरोरुहयोरर्पितास्तु ॥

प्राप्ता सा श्रीविश्वेश्वरस्य कंठे अर्पिता प्रापिता चेति सर्वं शिवं ॥१६५॥ यदत्र चोक्तं सदसद्भिशोधितुं न प्रार्थये सज्जनपंडितानहं। तमोनुदं तत्तिमिरं विनाशितुं न याचते कोपि हि शुश्रुमो वयं ॥ १ ॥ इति श्रीमज्जज्योपनामकृष्णदीक्षितबाबूदीक्षितापरनामधेयसूरिसूनुरामचंद्रदीक्षितविरचिता स्वकृतकुंडरत्नावलीटीका मंजूषाख्या समाप्ता ॥

| नाम. | की. रु. आ. |
|---|---|
| श्वेताश्वतरोपनिषद्-अन्वय-पदार्थ-भावार्थ-सहित ... ... ... | १—० |
| अष्टशान्ति--इसमें १ मर्यादिग्रह, २ सप्तग्रहीयोग, ३ मघारेवत्यादि, ४ ज्वरादिरोगोत्पत्ति, ५ सर्वनक्षत्र, ६ ग्रहण, ७ काकमैथुनदर्शन और ८ पल्लीसरठारोहण ये आठ शान्तियां हैं ... | ०—२ |
| अष्टलिङ्गतोभद्र--रंगीन .... | ०—१॥ |
| अन्त्येष्टिश्राद्धकर्मपद्धति--पं० चतुर्थीलालजीकृत | १--० |
| आह्निककर्मसूत्रावली शुक्ल यजुर्वेदी,--प्रातः-स्मरणसे लेकर शयन पर्यंतके सब कर्मप्रयोग एकत्र किये गये हैं | २-८ |

पुस्तक मिलनेका ठिकाना--


खेमराज श्रीकृष्णदास,
"श्रीवेङ्कटेश्वर" स्टीम्-प्रेस, मुम्बई.

गङ्गाविष्णु श्रीकृष्णदास,
"लक्ष्मीवेङ्कटेश्वर" स्टीम्-प्रेस, कल्याण-मुम्बई.